*Sri Garib Das Oriental Series-2*

# THE VĀLMĪKI RĀMĀYAṆA

According to Southern recension



Volume—I

**Containing Bala, Ayodhya, Arannya and Kishkindha Kandas.**



Ed. T.R. Krishnacharya

Preface by
Prof. J.W. de Jong
Australian National University,
Canberra.

SRI SATGURU PUBLICATIONS
INDIA

## PREFACE

In recent years scholars have shown an every-increasing interest in the study of the Indian epic. The publication of critical editions of both the Mahābhārata and the Rāmāyaṇa have greatly stimulated research in this field. However, there remains a great demand for editions of the so-called Vulgate recensions of the two epics. For centuries the most popular text of the Rāmāyaṇa has been that which is represented by the Southern recension, the basic text for almost all the commentaries. One of the most popular edition of it is the one published by T. R. Krishnacharya in two volumes in 1905, which was reprinted in 1930 but has been out of print for many years. This edition was printed very carefully by the famous Nirnaya-Sagar Press in Bombay. The editor added variant readings and explanatory notes which seem to have been taken mainly from Govindarāja's commentary. From 1911 to 1913 in collaboration with T. R. Vyasacharya he published in seven volumes another edition of the Rāmāyaṇa, but this time together with the commentary of Govindarāja and extracts from other commentaries.

Since the publication of the first two books of the Rāmāyaṇa by William Carey and Joshua Marshman (Serampore, 1806, 1808, 1810) many editions of the Rāmāyaṇa with or without commentaries have been published. At present almost all of them seem to be out of print. The famous edition of the Bengali reecension by Gaspare Gorresio is at present being reprinted in a facsimile edition by the Indian Heritage Trust. It is to be hoped that other editions will be reprinted in the same way.

The immense popularity of the Rāmâyaṇa in India is obvious from the great number of commentaries (cf. G. H. Bhatt's Appendix III at the end of the critical edition of the Uttarakāṇḍa, Baroda, 1975). Only very few of them have been edited in their entirety. Extracts of others have been published, but most of them are available only in manuscript from. In his introduction to the first volume of the critical edition of the Rāmāyaṇa, the late G. H. Bhatt pointed out the necessity of publishing critical editions of them. The study of the commentaries can show how the Rāmayāṇa has been explained and interpreted over the centuries. Most of the commentaries have been preserved in manuscripts independent of the Rāmāyaṇa itself. It is therefore not necessary to edit these commentaries together with the Rāmāyaṇa, because it will be sufficient to indicate the variant readings attested in the commentary by referring to existing editions of the Rāmāyaṇa. In this respect, too, the present photomechanical reprint of T. R. Krishnacharya's editton could by very useful.

Canberra, 15 April 1981.

J. W. de Jong.
Australian National University.

# श्रीवैष्णवानां श्रीरामायणपठनोपक्रमानुसन्धेयक्रमः ।

प्रथमतः स्वस्वसंप्रदायनिर्वाहकाचार्यानुसन्धानम् । ततः लक्ष्मीनाथेत्यारभ्य प्रणतोऽस्मि नित्यमित्यन्तं । अनन्तरं श्रीशैलपूर्णविषयपितामहस्येति श्लोकमारभ्य श्रीभाष्यकारप्रभृति-स्वाचार्यपर्यन्तविषयाः सांप्रदायिकश्लोका अनुसन्धेयाः । यद्वा श्रीधरादिस्वाचार्यपर्यन्ताः प्रतिव्यक्तिश्लोका अनुसन्धेयाः ॥ ततः—कूजन्तं राम रामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १ ॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः । शृण्वन्रामकथानादं को न याति परां गतिम् ॥ २ ॥ यः पिबन्सततं रामचरितामृतसागरम् । अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ३ ॥ गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् । रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ४ ॥ अञ्जनानन्दनं वीरं जानकीशोकनाशनम् । कपीशमक्षहन्तारं वन्दे लङ्काभयंकरम् ॥ ५ ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ६ ॥ उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ७ ॥ आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् । पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ ८ ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् । बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ९ ॥ वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १० ॥ तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् । रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ ११ ॥ श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् । आजानुबाहुमरविन्ददलायताक्षं रामं निशाचरविनाशकरं नमामि ॥ १२ ॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् । अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १३ ॥ ततो यथाशक्ति श्रीकोशोपरि भगवदाराधनं कर्तव्यम् ॥ श्रीमते रामानुजाय नमः ॥

पारायणसमापनक्रमः ॥ ॥ एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः । प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः । येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ २ ॥ काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी । देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ ३ ॥ कावेरी वर्धतां काले काले वर्षतु वासवः । श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् ॥ ४ ॥ स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः । गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु ॥ ५ ॥ मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये । चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ६ ॥ वेदवेदान्तवेद्याय मेघश्यामलमूर्तये । पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गलम् ॥ ७ ॥ विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः । भाग्यानां परिपाकाय भव्यरूपाय मङ्गलम् ॥ ८ ॥ पितृभक्ताय सततं भ्रातृभिः सह सीतया । नन्दिताखिललोकाय रामभद्राय मङ्गलम् ॥ ९ ॥ त्यक्तसाकेतवासाय चित्रकूटविहारिणे । सेव्याय सर्वयमिनां धीरोदाराय मङ्गलम् ॥ १० ॥

सौमित्रिणा च जानक्या चापबाणासिधारिणे । संसेव्याय सदा भक्त्या स्वामिने मम मङ्गलम् ॥ ११ ॥ दण्डकारण्यवासाय खण्डितामरशत्रवे । गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गलम् ॥ १२ ॥ सादरं शबरीदत्तफलमूलाभिलाषिणे । सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गलम् ॥ १३ ॥ हनुमत्समवेताय हरीशाभीष्टदायिने । वालिप्रमथनायास्तु महाधीराय मङ्गलम् ॥ १४ ॥ श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे । जितराक्षसराजाय रणधीराय मङ्गलम् ॥ १५ ॥ आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया । राजाधिराजराजाय रामभद्राय मङ्गलम् ॥ १६ ॥ मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः । सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ १७ ॥ ततः पितामहस्येत्यारभ्य स्वाचार्यपर्यन्ताः श्लोका अनुसन्धेयाः । सीताविवाहपट्टाभिषेकसर्गयोस्तु—इयं सीता मम सुता, अभ्यषिञ्चन्नरव्याघ्रं इति श्लोकपठनात्पूर्वं मध्ये विशेषतो भगवदाराधनं च कर्तव्यम् ॥

# अथ स्मार्तानां श्रीरामायणपठनोपक्रमे अनुसन्धेयाः श्लोकाः

श्रीविघ्नेश्वरध्यानम् ॥ ॥ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥ वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ २ ॥ अनन्तरं श्रीमच्छंकरभगवत्पादादिगुरुपरम्परानुसन्धेया ॥ सरस्वतीप्रार्थना ॥ ॥ दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण । भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥३॥ वाल्मीकिनमस्क्रिया ॥ ॥ कूजन्तं राम रामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ४ ॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः । शृण्वन्रामकथानादं को न याति परां गतिम् ॥ ५ ॥ यः पिबन्सततं रामचरितामृतसागरम् । अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ६ ॥ हनुमन्नमस्क्रिया ॥ ॥ गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् । रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ७ ॥ अञ्जनानन्दनं वीरं जानकीशोकनाशनम् । कपीशमक्षहन्तारं वन्दे लङ्काभयंकरम् ॥ ८ ॥ उलङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ९ ॥ आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् । पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १० ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् । बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ११ ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥१२॥ श्रीरामायणप्रार्थना ॥ ॥ यः कर्णाञ्जलिसंपुटैरहरहः सम्यक्पिबत्यादराद्वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु । जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥ १३ ॥ तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् । रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ १४ ॥ वाल्मीकिगिरिसंभूता रामसागरगामिनी । पुनातु भुवनं पुण्या रामायणमहानदी ॥ १५ ॥ श्लोकसारसमाकीर्णं सर्गकल्लोलसंकुलम् । काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ १६ ॥ वेदवेद्ये परे पुंसि जाते दशरथा-

त्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १७ ॥ श्रीरामध्यानक्रमः ॥ ॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् । अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १८ ॥ वामे भूमिसुता पुरश्च हनुमान्पश्चात्सुमित्रासुतः शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च । सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥ १९ ॥ नमोस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै । नमोस्तु रुद्रेन्द्रयमानिलेभ्यो नमोस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ २० ॥ ततः श्रीकोशोपरि श्रीरामावाहनादिनैवेद्यान्तपूजा विधेया । पारायणावसाने च पुनः पूजा कर्तव्या ॥

**पारायणसमापनसमयानुसन्धेयश्लोकक्रमः॥** ॥स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः । गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु॥१॥ काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी । देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः॥२॥ अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः । अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥ ३ ॥ चरितं रघुनाथस्य शतकोटिप्रविस्तरम् । एकैकमक्षरं प्रोक्तं महापातकनाशनम् ॥ ४ ॥ शृण्वन्रामायणं भक्त्या यः पादं पदमेव वा । स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५ ॥ रामाय रामभद्राय रामचन्द्राय वेधसे । रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६ ॥ यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते । वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ७ ॥ यन्मङ्गलं सुपर्णस्य विनताऽकल्पयत्पुरा । अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ८ ॥ अमृतोत्पादने दैत्यान्घ्नतो वज्रधरस्य यत् । अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥ ९ ॥ त्रीन्विक्रमान्प्रक्रमतो विष्णोरमिततेजसः । यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् ॥ १० ॥ ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ते । मङ्गलानि महाबाहो दिशन्तु तव सर्वदा ॥ ११ ॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिस्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥ १२ ॥ श्रीसीताविवाहपट्टाभिषेकसर्गयोस्तु–इयं सीता, अभ्यषिञ्चन्, इति श्लोकपठनात्पूर्वं विशेषतो ध्यानावाहननैवेद्यादिनीराजनान्तसपर्या संविधेया ॥

# अथ माध्वानां रामायणपठनोपक्रमेऽनुसन्धेयाः श्लोकाः ।

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥ लक्ष्मीनारायणं वन्दे तद्भक्तप्रवरो हि यः । श्रीमदानन्दतीर्थाख्यो गुरुस्तं च नमाम्यहम् ॥ २ ॥ वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥ ३ ॥ सर्वविघ्नप्रशमनं सर्वसिद्धिकरं परम् । सर्वजीवप्रणेतारं वन्दे विजयदं हरिम् ॥ ४ ॥ सर्वाभीष्टप्रदं रामं सर्वारिष्टनिवारकम् । जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ ५ ॥ अभ्रमं भङ्गरहितमजडं विमलं सदा । आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥६॥ भवति यदनुभावादेडमूकोऽपि वाग्मी जडमतिरपि जन्तुर्जायते प्राज्ञमौलिः । सकलवचनचेतोदेवता भारती सा मम वचसि निधत्तां संनिधिं मानसे च ॥ ७ ॥ मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः ।

जयतीर्थाख्यतरणिर्भासतां नो हृदम्बरे ॥ ८ ॥ चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः । गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥ ९ ॥ कूजन्तं रामरामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १० ॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः । शृण्वन्रामकथानादं को न याति परां गतिम् ॥ ११ ॥ यः पिबन्सततं रामचरितामृतसागरम् । अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ १२ ॥ गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् । रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ १३ ॥ अञ्जनानन्दनं वीरं जानकीशोकनाशनम् । कपीशमक्षहन्तारं वन्दे लङ्काभयंकरम् ॥ १४ ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ १५ ॥ उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ १६ ॥ आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् । पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १७ ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् । बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ १८ ॥ वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १९ ॥ आपदामपहर्तारं दातारं सर्वसंपदाम् । लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ २० ॥ तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् । रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ २१ ॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् । अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम्॥२२॥वन्दे वन्द्यं विधिभवमहेन्द्रादिबृन्दारकेन्द्रैर्व्यक्तं व्याप्तं स्वगुणगणतो देशतः कालतश्च । धूतावद्यं सुखचितिमयैर्मङ्गलैर्युक्तमङ्गैः सानाथ्यं नो विदधदधिकं ब्रह्म नारायणाख्यम् ॥२३॥ भूषारत्नं भुवनवलयस्याखिलाश्चर्यरत्नं लीलारत्नं जलधिदुहितुर्देवतामौलिरत्नम् । चिन्तारत्नं जगति भजतां सत्सरोजद्युरत्नं कौसल्याया लसतु मम हृन्मण्डले पुत्ररत्नम् ॥ २४ ॥ महाव्याकरणाम्भोधिमन्थमानसमन्दरम् । कवयन्तं रामकीर्त्या हनुमन्तमुपास्महे ॥ २५ ॥ मुख्यप्राणाय भीमाय नमो यस्य भुजान्तरम् । नानावीरसुवर्णानां निकषाश्मायितं बभौ ॥ २६ ॥ स्वान्तस्थानन्तशय्याय पूर्णज्ञानमहार्णसे । उत्तुङ्गवाक्तरङ्गाय मध्वदुग्धाब्धये नमः ॥ २७ ॥ वाल्मीकेर्गौः पुनीयान्नो महीधरपदाश्रया । यद्दुग्धमुपजीवन्ति कवयस्तर्णका इव ॥ २८ ॥ सूक्तिरत्नाकरे रम्ये मूलरामायणार्णवे।विहरन्तो महीयांसः प्रीयन्तां गुरवो मम ॥ २९ ॥ हयग्रीव हयग्रीव हयग्रीवेति यो वदेत् । तस्य निःसरते वाणी जह्नुकन्याप्रवाहवत् ॥ ३० ॥

**पारायणसमापनक्रमः** । स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः । गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥ काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी । देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ २ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः । येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ ३ ॥ मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये । चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ४ ॥ इत्यादिश्लोकाः श्रीवैष्णवपद्धतिवदनुसन्धेयाः ॥

# श्रीरामपञ्चायतनम् ।



आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥

सौमित्रिणा च जानक्या चापबाणासिधारिणे । संसेव्याय सदा भक्त्या स्वामिने मम मङ्गलम् ॥ ११ ॥ दण्डकारण्यवासाय खण्डितामरशत्रवे । गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गलम् ॥ १२ ॥ सादरं शबरीदत्तफलमूलाभिलाषिणे । सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गलम् ॥ १३ ॥ हनुमत्समवेताय हरीशाभीष्टदायिने । वालिप्रमथनायास्तु महाधीराय मङ्गलम् ॥ १४ ॥ श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे । जितराक्षसराजाय रणधीराय मङ्गलम् ॥ १५ ॥ आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया । राजाधिराजराजाय रामभद्राय मङ्गलम् ॥ १६ ॥ मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः । सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥ १७ ॥ ततः पितामहस्येत्यारभ्य स्वाचार्यपर्यन्ताः श्लोका अनुसन्धेयाः । सीताविवाहपट्टाभिषेकसर्गयोस्तु–इयं सीता मम सुता, अभ्यषिञ्चन्नरव्याघ्रं इति श्लोकपठनात्पूर्वं मध्ये विशेषतो भगवदाराधनं च कर्तव्यम् ॥

# अथ स्मार्तानां श्रीरामायणपठनोपक्रमे अनुसन्धेयाः श्लोकाः

श्रीविघ्नेश्वरध्यानम् ॥ ॥ शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥ वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ २ ॥ अनन्तरं श्रीमच्छंकरभगवत्पादादिगुरुपरम्परानुसन्धेया ॥ सरस्वतीप्रार्थना ॥ ॥ दोर्भिर्युक्ता चतुर्भिः स्फटिकमणिमयीमक्षमालां दधाना हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण । भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥३॥ वाल्मीकिनमस्क्रिया ॥ ॥ कूजन्तं राम रामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ४ ॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः । शृण्वन्रामकथानादं को न याति परां गतिम् ॥ ५ ॥ यः पिबन्सततं रामचरितामृतसागरम् । अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ६ ॥ हनुमन्नमस्क्रिया ॥ ॥ गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् । रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ७ ॥ अञ्जनानन्दनं वीरं जानकीशोकनाशनम् । कपीशमक्षहन्तारं वन्दे लङ्काभयंकरम् ॥ ८ ॥ उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ९ ॥ आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् । पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १० ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् । बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ११ ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥१२॥ श्रीरामायणप्रार्थना ॥ ॥ यः कर्णाञ्जलिसंपुटैरहरहः सम्यक्पिबत्यादराद्वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु । जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥ १३ ॥ तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् । रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ १४ ॥ वाल्मीकिगिरिसंभूता रामसागरगामिनी । पुनातु भुवनं पुण्या रामायणमहानदी ॥ १५ ॥ श्लोकसारसमाकीर्णं सर्गकल्लोलसंकुलम् । काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ १६ ॥ वेदवेद्ये परे पुंसि जाते दशरथा-

त्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १७ ॥ श्रीरामध्यानक्रमः ॥ ॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् । अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १८ ॥ वामे भूमिसुता पुरश्च हनुमान्पश्चात्सुमित्रासुतः शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च । सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥ १९ ॥ नमोस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै । नमोस्तु रुद्रेन्द्रयमानिलेभ्यो नमोस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ २० ॥ ततः श्रीकोशोपरि श्रीरामावाहनादिनैवेद्यान्तपूजा विधेया। पारायणावसाने च पुनः पूजा कर्तव्या ॥

पारायणसमापनसमयानुसन्धेयश्लोकक्रमः॥ ॥स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः। गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु॥१॥ काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी। देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः॥२॥ अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः । अधनाः सधनाः सन्तु जीवन्तु शरदां शतम् ॥ ३ ॥ चरितं रघुनाथस्य शतकोटिप्रविस्तरम् । एकैकमक्षरं प्रोक्तं महापातकनाशनम् ॥ ४ ॥ शृण्वन्रामायणं भक्त्या यः पादं पदमेव वा । स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५ ॥ रामाय रामभद्राय रामचन्द्राय वेधसे । रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६ ॥ यन्मङ्गलं सहस्राक्षे सर्वदेवनमस्कृते । वृत्रनाशे समभवत्तत्ते भवतु मङ्गलम् ॥ ७ ॥ यन्मङ्गलं सुपर्णस्य विनताऽकल्पयत्पुरा । अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गलम् ॥ ८ ॥ अमृतोत्पादने दैत्यान्घ्नतो वज्रधरस्य यत् । अदितिर्मङ्गलं प्रादात्तत्ते भवतु मङ्गलम् ॥ ९ ॥ त्रीन्विक्रमान्प्रक्रमतो विष्णोरमिततेजसः । यदासीन्मङ्गलं राम तत्ते भवतु मङ्गलम् ॥ १० ॥ ऋतवः सागरा द्वीपा वेदा लोका दिशश्च ते । मङ्गलानि महाबाहो दिशन्तु तव सर्वदा ॥ ११ ॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिस्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥ १२ ॥ श्रीसीताविवाहपट्टाभिषेकसर्गयोस्तु—इयं सीता, अभ्यषिञ्चन्, इति श्लोकपठनात्पूर्वं विशेषतो ध्यानावाहननैवेद्यादिनीराजनान्तसपर्या संविधेया ॥

## अथ माध्वानां रामायणपठनोपक्रमेऽनुसन्धेयाः श्लोकाः ।

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १ ॥ लक्ष्मीनारायणं वन्दे तद्भक्तप्रवरो हि यः । श्रीमदानन्दतीर्थाख्यो गुरुस्तं च नमाम्यहम् ॥ २ ॥ वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥ ३ ॥ सर्वविघ्नप्रशमनं सर्वसिद्धिकरं परम् । सर्वजीवप्रणेतारं वन्दे विजयदं हरिम् ॥ ४ ॥ सर्वाभीष्टप्रदं रामं सर्वारिष्टनिवारकम् । जानकीजानिमनिशं वन्दे मद्गुरुवन्दितम् ॥ ५ ॥ अभ्रमं भङ्गरहितमजडं विमलं सदा । आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥६॥ भवति यदनुभावादेडमूकोऽपि वाग्मी जडमतिरपि जन्तुर्जायते प्राज्ञमौलिः। सकलवचनचेतोदेवता भारती सा मम वचसि निधत्तां संनिधिं मानसे च ॥ ७ ॥ मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः ।

जयतीर्थाख्यतरणिर्भासतां नो हृदम्बरे ॥ ८ ॥ चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः । गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥ ९ ॥ कूजन्तं रामरामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १० ॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः । शृण्वन्रामकथानादं को न याति परां गतिम् ॥ ११ ॥ यः पिबन्सततं रामचरितामृतसागरम् । अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ १२ ॥ गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् । रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ १३ ॥ अञ्जनानन्दनं वीरं जानकीशोकनाशनम् । कपीशमक्षहन्तारं वन्दे लङ्काभयंकरम् ॥ १४ ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ १५ ॥ उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ १६ ॥ आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् । पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १७ ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् । बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ १८ ॥ वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १९ ॥ आपदामपहर्तारं दातारं सर्वसंपदाम् । लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ २० ॥ तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् । रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ २१ ॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् । अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ २२ ॥ वन्दे वन्द्यं विधिभवमहेन्द्रादिवृन्दारकेन्द्रैर्व्यक्तं व्याप्तं स्वगुणगणतो देशतः कालतश्च । धूतावद्यं सुखचितिमयैर्मङ्गलैर्युक्तमङ्गैः सानाथ्यं नो विदधदधिकं ब्रह्म नारायणाख्यम् ॥ २३ ॥ भूषारत्नं भुवनवलयस्याखिलाश्चर्यरत्नं लीलारत्नं जलधिदुहितुर्देवतामौलिरत्नम् । चिन्तारत्नं जगति भजतां सत्सरोजद्युरत्नं कौसल्याया लसतु मम हृन्मण्डले पुत्ररत्नम् ॥ २४ ॥ महाव्याकरणाम्भोधिमन्थमानसमन्दरम् । कवयन्तं रामकीर्त्या हनुमन्तमुपास्महे ॥ २५ ॥ मुख्यप्राणाय भीमाय नमो यस्य भुजान्तरम् । नानावीरसुवर्णानां निकषाश्मायितं बभौ ॥ २६ ॥ स्वान्तस्थानन्तशय्याय पूर्णज्ञानमहार्णसे । उत्तुङ्गवाक्तरङ्गाय मध्वदुग्धाब्धये नमः ॥ २७ ॥ वाल्मीकेर्गौः पुनीयान्नो महीधरपदाश्रया । यद्दुग्धमुपजीवन्ति कवयस्तर्णका इव ॥ २८ ॥ सूक्तिरत्नाकरे रम्ये मूलरामायणार्णवे । विहरन्तो महीयांसः प्रीयन्तां गुरवो मम ॥ २९ ॥ हयग्रीव हयग्रीव हयग्रीवेति यो वदेत् । तस्य निःसरते वाणी जह्नुकन्याप्रवाहवत् ॥ ३० ॥

**पारायणसमापनक्रमः** । स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः । गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकाः समस्ताः सुखिनो भवन्तु ॥ १ ॥ काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी । देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ॥ २ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः । येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ ३ ॥ मङ्गलं कोसलेन्द्राय महनीयगुणाब्धये । चक्रवर्तितनूजाय सार्वभौमाय मङ्गलम् ॥ ४ ॥ इत्यादिश्लोकाः श्रीवैष्णवपद्धतिवदनुसन्धेयाः ॥

# श्रीरामपञ्चायतनम् ।



आपदामपहर्तारं दातारं सर्वसंपदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥

श्रीः।

# श्रीमद्वाल्मीकिरामायणम्।

## बालकाण्डम्।

### प्रथमः सर्गः।

॥ श्रीरामचन्द्राय नमः ॥

तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम्। नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवम् ॥ १
कोन्वस्मिन्सांप्रतं लोके गुणवान्कश्च वीर्यवान्। धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः॥ २
चा[1]रित्रेण च को युक्तः सर्वभूतेषु को हितः। विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः॥ ३
आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः। कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ४
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे। महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥ ५
श्रुत्वा चैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः। श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत्॥ ६
बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः। मुने वक्ष्याम्यहं बुद्ध्वा तैर्युक्तः[7] श्रूयतां नरः॥ ७
इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः। नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी[2] ८
बुद्धिमान्नीतिमान्वाग्मी श्रीमाञ्छत्रुनिबर्हणः। विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः॥ ९
महोरस्को महेष्वासो[3] गूढजत्रुर्[4]अरिन्दमः। आजानुबाहुः सुशिराः सुललाटः सुविक्रमः ॥ १०
समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान्। पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ११
धर्मज्ञः सत्यसन्धश्च प्रजानां च हिते रतः। यशस्वी ज्ञानसंपन्नः शुचिर्वश्यः समाधिमान्॥ १२
प्रजापतिसमः श्रीमान्धाता रिपुनिषूदनः। रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ॥ १३
रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता। वेदवेदाङ्गतत्त्वज्ञो धनुर्वेदे च निष्ठितः ॥ १४
सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान्प्रतिभानवान्[5]। सर्वलोकप्रियः साधुरदीनात्मा विचक्षणः ॥ १५
सर्वदाऽभिगतः सद्भिः समुद्र इव सिन्धुभिः। आर्यः सर्वसमश्चैव सदैकप्रियदर्शनः[6] ॥ १६
स च सर्वगुणोपेतः कौसल्यानन्दवर्धनः। समुद्र इव गाम्भीर्ये धैर्येण हिमवानिव ॥ १७
विष्णुना सदृशो वीर्ये सोमवत्प्रियदर्शनः। कालाग्निसदृशः क्रोधे क्षमया पृथिवीसमः ॥ १८
धनदेन समस्त्यागे सत्ये धर्म इवापरः। तमेवंगुणसंपन्नं रामं सत्यपराक्रमम् ॥ १९
ज्येष्ठं श्रेष्ठगुणैर्युक्तं प्रियं दशरथः सुतम्। प्रकृतीनां हितैर्युक्तं प्रकृतिप्रियकाम्यया ॥ २०
यौवराज्येन संयोक्तुमैच्छत्प्रीत्या महीपतिः। तस्याभिषेकसंभारान्दृष्ट्वा भार्याथ कैकयी ॥ २१
पूर्वं दत्तवरा देवी वरमेनमयाचत। विवासनं च रामस्य भरतस्याभिषेचनम् ॥ २२
स सत्यवचनाद्राजा धर्मपाशेन संयतः। विवासयामास सुतं रामं दशरथः प्रियम् ॥ २३
स जगाम वनं वीरः प्रतिज्ञामनुपालयन्। पितुर्वचननिर्देशात्कैकेय्याः प्रियकारणात् ॥ २४

---

१ चरित्रमेव चारित्रम्। २ सर्वं जगद्वशेऽस्यास्तीति वशी। सर्वस्वामीत्यर्थः। ३ महान् इष्वासो धनुर्यस्यासौ। ४ गूढे मांसलत्वेनाप्रकाशे जत्रुणी अंसद्वयसन्धिगतास्थिनी यस्यासौ। ५ व्यवहारकाले झटिति स्फुरणं प्रतिभानं तद्वान्। ६ सदानुभवेपि नवनवतया भासमानः। ७ बद्धः।

तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह । स्नेहाद्विनयसंपन्नः सुमित्रानन्दवर्धनः ॥
भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ॥ २५
रामस्य दयिता भार्या नित्यं प्राणसमा हिता । जनकस्य कुले जाता देवमायेव निर्मिता ॥ २६
सर्वलक्षणसंपन्ना नारीणामुत्तमा वधूः[१] । सीताप्यनुगता रामं शशिनं रोहिणी यथा ॥ २७
पौरैरनुगतो दूरं पित्रा दशरथेन च । शृङ्गिबेरपुरे[२] सूतं गङ्गाकूले व्यसर्जयत् ॥ २८
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ २९
गुहेन सहितो रामो लक्ष्मणेन च सीतया । ते वनेन[३] वनं गत्वा नदीस्तीर्त्वा बहूदकाः ॥ ३०
चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् । रम्यमावसथं कृत्वा रममाणा वने त्रयः ॥ ३१
देवगन्धर्वसंकाशास्तत्र ते न्यवसन्सुखम् । चित्रकूटं गते रामे पुत्रशोकातुरस्तथा[४] ॥ ३२
राजा दशरथः स्वर्गं जगाम विलपन्सुतम् । मृते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः ॥ ३३
नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः । स जगाम वनं वीरो रामपादप्रसादकः ॥ ३४
गत्वा तु सुमहात्मानं रामं सत्यपराक्रमम् । अयाचद्भ्रातरं राममार्यभावपुरस्कृतः[५] ॥ ३५
त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् । रामोऽपि परमोदारः सुमुखः सुमहायशाः ॥
न चैच्छत्पितुरादेशाद्राज्यं रामो महाबलः ॥ ३६
पादुके चास्य राज्याय[६] न्यासं[७] दत्वा पुनःपुनः । निवर्तयामास ततो भरतं भरताग्रजः ॥ ३७
स काममनवाप्यैव रामपादावुपस्पृशन् । नन्दिग्रामेऽकरोद्राज्यं रामागमनकाङ्क्षया ॥ ३८
गते तु भरते श्रीमान्सत्यसन्धो जितेन्द्रियः । रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ॥
तत्रागमनमेकाग्रो दण्डकान्प्रविवेश ह ॥ ३९
प्रविश्य तु महारण्यं रामो राजीवलोचनः । विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ॥ ४०
सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ॥ ४१
अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् । खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ॥ ४२
वसतस्तस्य रामस्य वने वनचरैः सह । ऋषयोऽभ्यागमन्सर्वे वधायासुररक्षसाम् ॥ ४३
स तेषां प्रतिशुश्राव राक्षसानां तथा[८] वने ॥ ४४
प्रतिज्ञातश्च रामेण वधः संयति रक्षसाम् । ऋषीणामग्निकल्पानां दण्डकारण्यवासिनाम् ॥ ४५
तेन तत्रैव वसता जनस्थाननिवासिनी । विरूपिता शूर्पणखा राक्षसी कामरूपिणी ॥ ४६
ततः शूर्पणखावाक्यादुद्युक्तान्सर्वराक्षसान् । खरं त्रिशिरसं चैव दूषणं चैव राक्षसम् ॥
निजघान रणे[९] रामस्तेषां चैव पदानुगान् ॥ ४७
वने तस्मिन्निवसता जनस्थाननिवासिनाम् । रक्षसां निहतान्यासन्सहस्राणि चतुर्दश ॥ ४८
ततो ज्ञातिवधं श्रुत्वा रावणः क्रोधमूर्छितः । सहायं वरयामास मारीचं नाम राक्षसम् ॥ ४९
वार्यमाणः सुबहुशो मारीचेन स रावणः । न विरोधो बलवता क्षमो रावण तेन ते ॥ ५०
अनादृत्य तु तद्वाक्यं रावणः कालचोदितः । जगाम सहमारीचस्तस्याश्रमपदं तदा ॥ ५१
तेन मायाविना दूरमपवाह्य नृपात्मजौ । जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ॥ ५२

---

१ दशरथस्नुषा । अचिरोढा वा । २ शृङ्गिणः कृष्णसरादयः तेषां बेराणि कृत्रिमशरीराणि वञ्चनेन सजातीयमृगग्रहणार्थानि यस्मिंस्तत् शृङ्गिबेरं तन्नाम्नि पुरे । ३ ते वनेन वन वनाद्वनं गत्वा । ते वनेन पादचारेण वनं गत्वेति वा । ४ उक्तप्रकारेण । ५ पुरस्कृतः आर्यभावो येन सः । आहिताग्न्यादित्वात्परनिपातः । यद्वा । स्वस्यार्यभावेन पुरस्कृतः श्लाघितः । ६ राज्यं कर्तुम् । ७ स्वप्रतिनिधिम् । ८ यथा तैरर्थितं तथा प्रतिशुश्राव । ९ युद्धे ।

गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् । राघवः शोकसंतप्तो विललापाकुलेन्द्रियः ॥ ५३
ततस्तेनैव शोकेन गृध्रं दग्ध्वा जटायुषम् । मार्गमाणो वने सीतां राक्षसं संददर्श ह ॥
कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥ ५४
तं निहत्य महाबाहुर्ददाह स्वर्गतश्च सः । स चास्य कथयामास शबरीं धर्मचारिणीम् ॥
श्रमणीं धर्मनिपुणामभिगच्छेति राघवम् ॥ ५५
सोऽभ्यगच्छन्महातेजाः शबरीं शत्रुसूदनः । शबर्या पूजितः सम्यग्रामो दशरथात्मजः ॥ ५६
पम्पातीरे हनुमता संगतो वानरेण ह । हनुमद्वचनाच्चैव सुग्रीवेण समागतः ॥ ५७
सुग्रीवाय च तत्सर्वं शंसद्रामो महाबलः । आदितस्तद्यथावृत्तं सीतायाश्च विशेषतः ॥ ५८
सुग्रीवश्चापि तत्सर्वं श्रुत्वा रामस्य वानरः । चकार सख्यं रामेण प्रीतश्चैवाग्निसाक्षिकम् ॥ ५९
ततो वानरराजेन वैरानुकथनं प्रति । रामायावेदितं सर्वं प्रणयाद्दुःखितेन च ॥ ६०
प्रतिज्ञातं च रामेण तदा वालिवधं प्रति । वालिनश्च बलं तत्र कथयामास वानरः ॥ ६१
सुग्रीवः शङ्कितश्चासीन्नित्यं वीर्येण राघवे ॥ ६२
राघवप्रत्ययार्थं तु दुन्दुभेः कायमुत्तमम् । दर्शयामास सुग्रीवो महापर्वतसन्निभम् ॥ ६३
उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः । पादाङ्गुष्ठेन चिक्षेप संपूर्णं दशयोजनम् ॥ ६४
बिभेद च पुनस्तालान्सप्तैकेन महेषुणा । गिरिं रसातलं चैव जनयन् प्रत्ययं तदा ॥ ६५
ततः प्रीतमनास्तेन विश्वस्तः स महाकपिः । किष्किन्धां रामसहितो जगाम च गुहां तदा ॥ ६६
ततोऽगर्जद्धरिवरः सुग्रीवो हेमपिङ्गलः । तेन नादेन महता निर्जगाम हरीश्वरः ॥ ६७
अनुमान्य तदा तारां सुग्रीवेण समागतः । निजघान च तत्रैनं शरेणैकेन राघवः ॥ ६८
ततः सुग्रीववचनाद्धत्वा वालिनमाहवे । सुग्रीवमेव तद्राज्ये राघवः प्रत्यपादयत् ॥ ६९
स च सर्वान्समानीय वानरान् वानरर्षभः । दिशः प्रस्थापयामास दिदृक्षुर्जनकात्मजाम् ॥ ७०
ततो गृध्रस्य वचनात्संपातेर्हनुमान् बली । शतयोजनविस्तीर्णं पुप्लुवे लवणार्णवम् ॥ ७१
तत्र लङ्कां समासाद्य पुरीं रावणपालिताम् । ददर्श सीतां ध्यायन्तीमशोकवनिकां गताम् ॥ ७२
निवेदयित्वाऽभिज्ञानं प्रवृत्तिं च निवेद्य च । समाश्वास्य च वैदेहीं मर्दयामास तोरणम् ॥ ७३
पञ्च सेनाग्रगान् हत्वा सप्त मन्त्रिसुतानपि । शूरमक्षं च निष्पिष्य ग्रहणं समुपागमत् ॥ ७४
अस्त्रेणोन्मुक्तमात्मानं ज्ञात्वा पैतामहाद्वरात् । मर्षयन् राक्षसान्वीरो यन्त्रिणस्तान्यदृच्छया॥ ७५
ततो दग्ध्वा पुरीं लङ्कामृते सीतां च मैथिलीम् । रामायप्रियमाख्यातुं पुनरायान्महाकपिः ७६
सोऽभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणम् । न्यवेदयदमेयात्मा दृष्टा सीतेति तत्त्वतः ॥७७
ततः सुग्रीवसहितो गत्वा तीरं महोदधेः । समुद्रं क्षोभयामास शरैरादित्यसन्निभैः ॥ ७८
दर्शयामास चात्मानं समुद्रः सरितां पतिः । समुद्रवचनाच्चैव नलं सेतुमकारयत् ॥ ७९
तेन गत्वा पुरीं लङ्कां हत्वा रावणमाहवे । रामः सीतामनुप्राप्य परां व्रीडामुपागमत् ॥ ८०
तामुवाच ततो रामः परुषं जनसंसदि । अमृष्यमाणा सा सीता विवेश ज्वलनं सती ॥ ८१
ततोऽग्निवचनात्सीतां ज्ञात्वा विगतकल्मषाम् । बभौ रामः संप्रहृष्टः पूजितः सर्वदैवतैः॥ ८२
कर्मणा तेन महता त्रैलोक्यं सचराचरम् । सदेवर्षिगणं तुष्टं राघवस्य महात्मनः ॥ ८३
अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् । कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥८४

१ राघवः इति पाठान्तरं । तस्य स राघव इति उत्तरश्लोकेनान्वयः । २ आद्यचकारेण नैव दंशान्न मशकानित्याधिकं समुच्चीयते।

देवताभ्यो वरं प्राप्य समुत्थाप्य च वानरान्। अयोध्यां प्रस्थितो रामः पुष्पकेण सुहृद्वृतः ८५
भरद्वाजाश्रमं गत्वा रामः सत्यपराक्रमः। भरतस्यान्तिकं रामो हनूमन्तं व्यसर्जयत् ॥ ८६
पुनराख्यायिकां जल्पन् सुग्रीवसहितस्तदा। पुष्पकं तत्समारुह्य नन्दिग्रामं ययौ तदा ॥ ८७
नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः। रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान् ८८
प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः। निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥ ८९
न पुत्रमरणं किंचिद्द्रक्ष्यन्ति पुरुषाः क्वचित्। नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ९०
न चाग्निजं भयं किंचिन्नाप्सु मज्जन्ति जन्तवः। न वातजं भयं किंचिन्नापि ज्वरकृतं तथा ॥
न चापि क्षुद्भयं तत्र न तस्करभयं तथा ॥ ९१
नगराणि च राष्ट्राणि धनधान्ययुतानि च। नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ॥ ९२
अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ॥ ९३
गवां कोट्ययुतं दत्त्वा ब्रह्मलोकं प्रयास्यति। असङ्ख्येयं धनं दत्वा ब्राह्मणेभ्यो महायशाः॥९४
राजवंशाञ्छतगुणान्स्थापयिष्यति राघवः। चातुर्वर्ण्यं च लोकेऽस्मिन्स्वे स्वे धर्मे नियोक्ष्यति॥
दशवर्षसहस्राणि दशवर्षशतानि च। रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति ॥ ९६
इदं पवित्रं पापघ्नं पुण्यं वेदैश्च संमितम्। यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ॥ ९७
एतदाख्यानमायुष्यं पठन्रामायणं नरः। सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥ ९८
पठन् द्विजो वागृषभत्वमीयात्स्यात्क्षत्रियो भूमिपतित्वमीयात्।
वणिग्जनः पण्यफलत्वमीयाज्जनश्च शूद्रोपि महत्त्वमीयात् ॥ ९९

इत्यार्षे श्रीमद्रामायणे वाल्मीकिये आदिकाव्ये बालकाण्डे श्रीरामायणकथासंक्षेपो नाम प्रथमः सर्गः ॥ १ ॥

---

## द्वितीयः सर्गः।

नारदस्य तु तद्वाक्यं श्रुत्वा वाक्यविशारदः। पूजयामास धर्मात्मा सहशिष्यो महामुनिः॥ १
यथावत्पूजितस्तेन देवर्षिर्नारदस्तदा। आपृष्ट्वैवाभ्यनुज्ञातः स जगाम विहायसम् ॥ २
स मुहूर्तं गते तस्मिन्देवलोकं मुनिस्तदा। जगाम तमसातीरं जाह्नव्यास्त्वविदूरतः ॥ ३
स तु तीरं समासाद्य तमसाया मुनिस्तदा। शिष्यमाह स्थितं पार्श्वे दृष्ट्वा तीर्थमकर्दमम् ॥ ४
अकर्दममिदं तीर्थं भरद्वाज निशामय। रमणीयं प्रसन्नाम्बु सन्मनुष्यमनो यथा ॥ ५
न्यस्यतां कलशं तात दीयतां वल्कलं मम। इदमेवावगाहिष्ये तमसातीर्थमुत्तमम् ॥ ६
एवमुक्तो भरद्वाजो वाल्मीकेन महात्मना। प्रायच्छत मुनेस्तस्य वल्कलं नियतो गुरोः ॥ ७
स शिष्यहस्तादादाय वल्कलं नियतेन्द्रियः। विचचार ह पश्यंस्तत्सर्वतो विपुलं वनम् ॥ ८
तस्याभ्याशे तु मिथुनं चरन्तमनपायिनम्। ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुनिःस्वनम् ॥ ९
तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः। जघान वैरनिलयो निषादस्तस्य पश्यतः ॥ १०
तं शोणितपरीताङ्गं वेष्टमानं महीतले। भार्या तु निहतं दृष्ट्वा रुराव करुणां गिरम् ॥ ११
वियुक्ता पतिना तेन द्विजेन सहचारिणा। ताम्रशीर्षेण मत्तेन पत्रिणा सहितेन वै ॥ १२

---

१ स्यादित्येतदव्ययं यद्यर्थे। इदं रामायणं पठन्पुरुषः द्विजो ब्राह्मणो यदि वागृषभत्वं वाचि श्रैष्ठ्यं ईयात्। अथवा स्यादित्येतदल्पार्थेऽव्ययम्। तथाच स्यात्क्षत्रियः अल्पनृपतिः। भूमिपतित्वं अखण्डभूमण्डलेश्वरत्वम्। २ कलशस्तातेति पाठान्तरम्। ३ पत्या। ४ सहचरणशीलेन। ५ सहितेनेत्यनेन मनस्सङ्गतिरुच्यते तस्मान्न सहचारिणेत्यनेन पुनरुक्तिः।

तथा तु तं द्विजं दृष्ट्वा निषादेन निपातितम् । ऋषेर्धर्मात्मनस्तस्य कारुण्यं समपद्यत ॥ १३
ततः करुणवेदित्वादधर्मोऽयमिति द्विजः । निशाम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत् ॥ १४
मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥१५
तस्यैवं ब्रुवतश्चिन्ता बभूव हृदि वीक्षतः । शोकार्तेनास्य शकुनेः किमिदं व्याहृतं मया ॥ १६
चिन्तयन्स महाप्राज्ञश्चकार मतिमान्मतिम् । शिष्यं चैवाब्रवीद्वाक्यमिदं स मुनिपुंगवः ॥१७
पादबद्धोऽक्षरसमस्तन्त्रीलयसमन्वितः । शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा ॥ १८
शिष्यस्तु तस्य ब्रुवतो मुनेर्वाक्यमनुत्तमम् । प्रतिजग्राह संहृष्टस्तस्य तुष्टोऽभवद्गुरुः ॥ १९
सोऽभिषेकं ततः कृत्वा तीर्थे तस्मिन् यथाविधि । तमेव चिन्तयन्नर्थमुपावर्तत वै मुनिः ॥२०
भरद्वाजस्ततः शिष्यो विनीतः श्रुतवान्मुनिः । कलशं पूर्णमादाय पृष्ठतोऽनुजगाम ह ॥ २१
स प्रविश्याश्रमपदं शिष्येण सह धर्मवित् । उपविष्टः कथाश्चान्याश्चकार ध्यानमास्थितः॥२२
आजगाम ततो ब्रह्मा लोककर्ता स्वयं प्रभुः । चतुर्मुखो महातेजा द्रष्टुं तं मुनिपुंगवम् ॥ २३
वाल्मीकिरथ तं दृष्ट्वा सहसोत्थाय वाग्यतः । प्राञ्जलिः प्रयतो भूत्वा तस्थौ परमविस्मितः२४
पूजयामास तं देवं पाद्यार्घ्यासनवन्दनैः । प्रणम्य विधिवच्चैनं पृष्ट्वानामयमव्ययम् ॥ २५
अथोपविश्य भगवानासने परमार्चिते । वाल्मीकये महर्षये संदिदेशासनं ततः ॥
ब्रह्मणा समनुज्ञातः सोऽप्युपाविशदासने ॥ २६
उपविष्टे तदा तस्मिन्साक्षाल्लोकपितामहे । तद्गतेनैव मनसा वाल्मीकिर्ध्यानमास्थितः ॥ २७
पापात्मना कृतं कष्टं वैरग्रहणबुद्धिना । यस्तादृशं चारुरवं क्रौञ्चं हन्यादकारणात् ॥ २८
शोचन्नेव मुहुः क्रौञ्चीमुपश्लोकमिमं पुनः । जगावन्तर्गतमना भूत्वा शोकपरायणः ॥ २९
तमुवाच ततो ब्रह्मा प्रहसन्मुनिपुंगवम् । श्लोक एव त्वया बद्धो नात्र कार्या विचारणा ॥ ३०
मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती । रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम ॥ ३१
धर्मात्मनो गुणवतो लोके रामस्य धीमतः । वृत्तं कथय धीरस्य यथा ते नारदाच्छ्रुतम् ॥ ३२
रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः । रामस्य सहसौमित्रे राक्षसानां च सर्वशः ॥ ३३
वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः । तच्चाप्यविदितं सर्वं विदितं ते भविष्यति ॥ ३४
न ते वागनृता काव्ये काचिदत्र भविष्यति । कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम्३५
यावत्स्थास्यन्ति गिरयः सरितश्च महीतले । तावद्रामायणकथा लोकेषु प्रचरिष्यति ॥ ३६
यावद्रामायणकथा त्वत्कृता प्रचरिष्यति । तावदूर्ध्वमधश्च त्वं मल्लोकेषु निवत्स्यसि ॥ ३७
इत्युक्त्वा भगवान् ब्रह्मा तत्रैवान्तरधीयत । ततः सशिष्यो वाल्मीकिर्मुनिर्विस्मयमाययौ ॥३८
तस्य शिष्यास्ततः सर्वे जगुः श्लोकमिमं पुनः । मुहुर्मुहुः प्रीयमाणाः प्राहुश्च भृशविस्मिताः३९
समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा । सोऽनुव्याहरणाद्भूयः श्लोकः श्लोकत्वमागतः ॥ ४०

१ अयं रतिकाले हिंसनम् । २ हे निषाद त्वं यत् यस्मात्कारणात् क्रौञ्चमिथुनात् काममोहितं एकं क्रौञ्चं अवधीः तत् तस्मात्कारणात् शाश्वतीः समाः बहून्संवत्सरान् प्रतिष्ठां स्थितिं मा अगमः मा प्राप्नुहि । नायं माङ् अपितु माशब्दः । तेन अडागमेपि न विरोधः । प्राथमिकोऽयं श्लोकः मङ्गलाशासनपरतयापि व्याक्रियते । हे मानिषाद श्रीनिवास राम यत् क्रौञ्चमिथुनात् रावणमण्डोदरीरूपाद्राक्षसमिथुनात् काममोहितं एकं रावणं अवधीः हत्वा त्रैलोक्यमपालयः तस्मात् त्वं शाश्वतीस्समाः प्रतिष्ठां अगमः प्राप्नुहि । लकारव्यत्ययः । ३ वीक्षतः तन्मिथुनं वीक्षमाणस्य तस्य हृदि चिन्ता बभूव । ४ उपावर्तत आश्रममगच्छत् । ५ अव्ययं अविच्छिन्नं । अनामयं कुशलम् । ६ शोकपरायणः क्रौञ्चीं गतमना भूत्वा मुहुः शोचन्नेव अन्तः मनसि इमं श्लोकं पुनः उपजगौ इत्यन्वयः । ७ मच्छन्दादेव मदभिप्रायादेव । ८ शोकः इति पाठान्तरम् ।

तस्य बुद्धिरियं जाता वाल्मीकेर्भावितात्मनः। कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम्॥४१

उदारवृत्तार्थपदैर्मनोरमैस्ततः स रामस्य चकार कीर्तिमान्।
समाक्षरैः श्लोकशतैर्यशस्विनो यशस्करं काव्यमुदारधीर्मुनिः॥ ४२

तदुपगतसमाससंधियोगं सममधुरोपनतार्थवाक्यबद्धम्।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम्॥ ४३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे द्वितीयः सर्गः॥ २॥

---

## तृतीयः सर्गः।

श्रुत्वा वस्तु समग्रं तद्धर्मात्मा धर्मसंहितम्। व्यक्तमन्वेषते भूयो यद्वृत्तं तस्य धीमतः॥ १
उपस्पृश्योदकं सम्यक् मुनिः स्थित्वा कृताञ्जलिः। प्राचीनाग्रेषु दर्भेषु धर्मेणान्वेषते गतिम्॥२
रामलक्ष्मणसीताभी राज्ञा दशरथेन च। सभार्येण सराष्ट्रेण यद्वृत्तं तत्र तत्त्वतः॥ ३
हसितं भाषितं चैव गतिर्या यच्च चेष्टितम्। तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यति॥ ४
स्त्रीतृतीयेन च तथा यत्प्राप्तं चरता वने। सत्यसन्धेन रामेण तत्सर्वं समवेक्षितम्॥ ५
ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः। पुरा यत्तत्र निर्वृत्तं पाणावामलकं यथा॥ ६
तत्सर्वं तत्त्वतो दृष्ट्वा धर्मेण स महाद्युतिः। अभिरामस्य रामस्य चरितं कर्तुमुद्यतः॥ ७
कामार्थगुणसंपन्नं[1] धर्मार्थगुणविस्तरम्[2]। समुद्रमिव रत्नाढ्यं सर्वश्रुतिमनोहरम्॥ ८
स यथा कथितं पूर्वं नारदेन महर्षिणा। रघुवंशस्य चरितं चकार भगवानृषिः॥ ९
जन्म रामस्य सुमहद्वीर्यं सर्वानुकूलताम्। लोकस्य प्रियतां क्षान्तिं सौम्यतां सत्यशीलताम्॥ १०
नानाचित्रकथाश्चान्या विश्वामित्रसमागमे। जानक्याश्च विवाहं च धनुषश्च विभेदनम्॥ ११
रामरामविवादं च गुणान्दाशरथेस्तथा। तदाभिषेकं रामस्य कैकेय्या दुष्टभावताम्॥ १२
विघातं चाभिषेकस्य रामस्य च विवासनम्। राज्ञः शोकविलापं च परलोकस्य चाश्रयम्॥ १३
प्रकृतीनां विषादं च प्रकृतीनां विसर्जनम्। निषादाधिपसंवादं सूतोपावर्तनं तथा॥ १४
गङ्गायाश्चापि सन्तारं भरद्वाजस्य दर्शनम्। भरद्वाजाभ्यनुज्ञानाच्चित्रकूटस्य दर्शनम्॥ १५
वास्तुकर्म[3] विवेशं[4] च भरतागमनं तथा। प्रसादनं च रामस्य पितुश्च सलिलक्रियाम्॥ १६
पादुकाग्र्याभिषेकं च नन्दिग्रामनिवासनम्। दण्डकारण्यगमनं विराधस्य वधं तथा॥ १७
दर्शनं शरभङ्गस्य सुतीक्ष्णेनाभिसंगमम्। अनसूयासहास्या[5]मप्यङ्गरागस्य चार्पणम्॥ १८
अगस्त्यदर्शनं चैव शूर्पनख्याश्च दर्शनम्। शूर्पनख्याश्च संवादं विरूपकरणं तथा॥ १९
वधं खरत्रिशिरसोरुत्थानं रावणस्य च॥ २०
मारीचस्य वधं चैव वैदेह्या हरणं तथा। राघवस्य विलापं च गृध्रराजनिबर्हणम्॥ २१
कबन्धदर्शनं चैव पम्पायाश्चैव दर्शनम्। शबर्या दर्शनं चैव हनूमद्दर्शनं तथा॥
विलापं चैव पम्पायां राघवस्य महात्मनः॥ २२
ऋश्यमूकस्य गमनं सुग्रीवेण समागमम्। प्रत्ययोत्पादनं सख्यं वालिसुग्रीवविग्रहम्॥ २३

---

१ गुणौ अप्रधानौ च तौ कामार्थौ च कामार्थगुणौ ताभ्यां संपन्नम्। २ धर्मार्थयोः धर्ममोक्षयोः गुणोऽतिशयस्तं विस्तृणातीति धर्मार्थगुणविस्तरम्। ३ शास्त्रोक्तप्रकारेण यथोचितमन्दिरनिर्माणं वास्तुकर्म। ४ विवेशं गृहे प्रविश्यावस्थानम्। ५ अनसूया अत्रिपत्नी तया सहास्यां सहासनम्।

वालिप्रमथनं चैव सुग्रीवप्रतिपादनम् । ताराविलापं समयं वर्षरात्रनिवासनम् ॥ २४
कोपं राघवसिंहस्य बलानामुपसंग्रहम् । दिशः प्रस्थापनं चैव पृथिव्याश्च निवेदनम् ॥ २५
अङ्गुलीयकदानं च ऋक्षस्य बिलदर्शनम् । प्रायोपवेशनं चैव संपातेश्चैव दर्शनम् ॥ २६
पर्वतारोहणं चैव सागरस्य च लङ्घनम् । समुद्रवचनाच्चैव मैनाकस्य च दर्शनम् ॥ २७
सिंहिकायाश्च निधनं लङ्कामलयदर्शनम् । रात्रौ लङ्काप्रवेशं च एकस्य च विचिन्तनम् ॥ २८
आपानभूमिगमनमवरोधस्य दर्शनम् । दर्शनं रावणस्यापि पुष्पकस्य च दर्शनम् ॥ २९
अशोकवनिकायानं सीतायाश्चैव दर्शनम् । अभिज्ञानप्रदानं च सीतायाश्चाभिभाषणम् ॥ ३०
राक्षसीदर्शनं चैव त्रिजटास्वप्नदर्शनम् । मणिप्रदानं सीताया वृक्षभङ्गं तथैव च ॥ ३१
राक्षसीविद्रवं चैव किंकराणां निबर्हणम् । ग्रहणं वायुसूनोश्च लङ्कादाहाभिगर्जनम् ॥ ३२
प्रतिप्लवनमेवाथ मधूनां हरणं तथा । राघवाश्वासनं चैव मणिनिर्यातनं तथा ॥ ३३
संगमं च समुद्रेण नलसेतोश्च बन्धनम् । प्रतारं च समुद्रस्य रात्रौ लङ्कावरोधनम् ॥ ३४
विभीषणेन संसर्गं वधोपायनिवेदनम् । कुम्भकर्णस्य निधनं मेघनादनिबर्हणम् ॥ ३५
रावणस्य विनाशं च सीतावाप्तिमरेः पुरे । विभीषणाभिषेकं च पुष्पकस्य च दर्शनम् ॥ ३६
अयोध्यायाश्च गमनं भरतेन समागमम् । रामाभिषेकाभ्युदयं सर्वसैन्यविसर्जनम् ॥
स्वराष्ट्ररञ्जनं चैव वैदेह्याश्च विसर्जनम् ॥ ३७
अनागतं च यत्किंचिद्रामस्य वसुधातले । तच्चकारोत्तरे काव्ये वाल्मीकिर्भगवानृषिः ॥ ३८

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ।

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः । चकार चरितं कृत्स्नं विचित्रपदमात्मवान् ॥ १
चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः । तथा सर्गशतान् पञ्च षट्काण्डानि तथोत्तरम् ॥ २
कृत्वापि तन्महाप्राज्ञः सभविष्यं सहोत्तरम् । चिन्तयामास कोन्वेतत्प्रयुञ्जीयादिति प्रभुः ॥ ३
तस्य चिन्तयमानस्य महर्षेर्भावितात्मनः । अगृह्णीतां ततः पादौ मुनिवेषौ कुशीलवौ[1] ॥ ४
कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ । भ्रातरौ स्वरसंपन्नौ ददर्शाश्रमवासिनौ ॥ ५
स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ । वेदोपबृंहणार्थाय[2] तावग्राहयत प्रभुः ॥ ६
काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् । पौलस्त्यवधमित्येव चकार चरितव्रतः ॥ ७
पाठ्ये[3] गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम्[4] । जातिभिः[5] सप्तभिर्बद्धं तन्त्रीलयसमन्वितम् ॥ ८
रसैः शृङ्गारकारुण्यहास्यवीरभयानकैः । रौद्रादिभिश्च संयुक्तं काव्यमेतदगायताम् ॥ ९
तौ तु गान्धर्वतत्त्वज्ञौ[6] मूर्छनास्थानकोविदौ[7] । भ्रातरौ स्वरसंपन्नौ गन्धर्वाविव रूपिणौ ॥ १०
रूपलक्षणसंपन्नौ मधुरस्वरभाषिणौ । बिम्बादिवोत्थितौ[8] बिम्बौ रामदेहात्तथापरौ ॥ ११
तौ राजपुत्रौ कार्त्स्न्येन धर्म्यमाख्यानमुत्तमम् । वाचो विधेयं तत्सर्वं कृत्वा काव्यमनिन्दितौ ॥
ऋषीणां च द्विजातीनां साधूनां च समागमे । यथोपदेशं तत्त्वज्ञौ जगतुस्तौ समाहितौ ॥
महात्मानौ महाभागौ सर्वलक्षणलक्षितौ ॥ १३

---

१ कुशीलवौ कुशलवौ । ईकारश्छान्दसः । २ वेदोपबृंहणरूपस्वग्रन्थपठनाय । उपबृंहणं नाम वेदार्थप्रतिपादको ग्रन्थः । ३ पाठ्ये गेये च मधुरं पठने गाने च श्राव्यम् । ४ त्रिभिः प्रमाणैः द्रुतमध्यविलम्बितैः । ५ शुद्धविकृतसंकीर्णादिजातिभिः । ६ गान्धर्वं गानशास्त्रम् । ७ मूर्च्छना वीणा स्थानानि मन्द्रमध्यताररूपस्वरत्रयोत्पत्तिस्थानानि । वीणावादने तदनुगुणोच्चारणे च निपुणावित्यर्थः । ८ रामदेहात् बिम्बात् रामदेहरूपबिम्बात् तथा उत्थितौ अपरौ बिम्बाविव प्रतिबिम्बाविव स्थितौ ।

तौ कदाचित्समेतानामृषीणां भावितात्मनाम् । आसीनानां समीपस्थाविदं काव्यमगायताम् ॥
तच्छ्रुत्वा मुनयः सर्वे बाष्पपर्याकुलेक्षणाः । साधुसाध्विति तावूचुः परं विस्मयमागताः ॥ १५
ते प्रीतमनसः सर्वे मुनयो धर्मवत्सलाः । प्रशशंसुः प्रशस्तव्यौ गायमानौ कुशीलवौ ॥ १६
अहो गीतस्य माधुर्यं श्लोकानां च विशेषतः । चिरं निर्वृत्तमप्येतत्प्रत्यक्षमिव दर्शितम् ॥ १७
प्रविश्य तावुभौ सुष्ठु तथा भावमगायताम् । सहितौ मधुरं रक्तं संपन्नं स्वरसंपदा ॥ १८
एवं प्रशस्यमानौ तौ तपःश्लाघ्यैर्महात्मभिः । संरक्ततरमत्यर्थं मधुरं तावगायताम् ॥ १९
[प्रीतः कश्चिन्मुनिस्ताभ्यां संस्थितः कलशं ददौ । प्रसन्नो वल्कले कश्चिद्ददौ ताभ्यां महायशाः १
अन्यः कृष्णाजिनं प्रादाद्यज्ञसूत्रमथापरः । कश्चित्कमण्डलुं प्रादान्मौञ्जीमन्यो महामुनिः ॥ २
बृसीमन्यस्तदा प्रादात्कौपीनमपरो मुनिः । ताभ्यां ददौ तदा हृष्टः कुठारमपरो मुनिः ॥ ३
काषायमपरो वस्त्रं चीरमन्यो ददौ मुनिः । जटाबन्धनमन्यस्तु काष्ठरज्जुं मुदान्वितः ॥ ४
यज्ञभाण्डमृषिः कश्चित्काष्ठभारं तथाऽपरः । औदुम्बरीं बृसीमन्ये स्वस्ति केचित्तदावदन् ॥ ५
आयुष्यमपरे प्राहुर्मुदा तत्र महर्षयः । ददुश्चैव वरान्सर्वे मुनयः सत्यवादिनः ॥ ६]
आश्चर्यमिदमाख्यानं मुनिना संप्रकीर्तितम् । परं कवीनामाधारं समाप्तं च यथाक्रमम् ॥ २०
अभिगीतमिदं गीतं सर्वगीतेषु कोविदौ । आयुष्यं पुष्टिजनकं सर्वश्रुतिमनोहरम् ॥ २१
प्रशस्यमानौ सर्वत्र कदाचित्तत्र गायकौ । रथ्यासु राजमार्गेषु ददर्श भरताग्रजः ॥ २२
स्ववेश्म चानीय ततो भ्रातरौ च कुशीलवौ । पूजयामास पूजार्हौ रामः शत्रुनिबर्हणः ॥ २३
आसीनः काञ्चने दिव्ये स च सिंहासने प्रभुः । उपोपविष्टः सचिवैर्भ्रातृभिश्च समन्वितः ॥ २४
दृष्ट्वा तु रूपसंपन्नौ तावुभौ नियतस्तदा । उवाच लक्ष्मणं रामः शत्रुघ्नं भरतं तथा ॥ २५
श्रूयतामिदमाख्यानमनयोर्देववर्चसोः । विचित्रार्थपदं सम्यग्गायकौ समचोदयत् ॥ २६
तौ चापि मधुरं रक्तं स्वञ्चितायतनिःस्वनम् । तन्त्रीलयवदत्यर्थं विश्रुतार्थमगायताम् ॥ २७
ह्लादयत्सर्वगात्राणि मनांसि हृदयानि च । श्रोत्राश्रयसुखं गेयं तद्बभौ जनसंसदि ॥ २८

इमौ मुनी पार्थिवलक्षणान्वितौ कुशीलवौ चैव महातपस्विनौ ।
ममापि तद्भूतिकरं प्रवक्ष्यते महानुभावं चरितं निबोधत ॥ २९
ततस्तु तौ रामवचःप्रचोदितावगायतां मार्गविधानसंपदा ।
स चापि रामः परिषद्गतः शनैर्बुभूषया सक्तमना बभूव ह ॥ ३०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे चतुर्थः सर्गः ॥ ४ ॥

---

## पञ्चमः सर्गः ।

सर्वा पूर्वमियं येषामासीत्कृत्स्ना वसुंधरा । प्रजापतिमुपादाय नृपाणां जयशालिनाम् ॥ १
येषां स सगरो नाम सागरो येन खानितः । षष्टिः पुत्रसहस्राणि यं यान्तं पर्यवारयन् ॥ २
इक्ष्वाकूणामिदं तेषां राज्ञां वंशे महात्मनाम् । महदुत्पन्नमाख्यानं रामायणमिति श्रुतम् ॥ ३

---

१ भावं सुष्ठु प्रविश्य रतिहासादिभावो यथा प्रकाशितो भवति तथावगाह्येत्यर्थः । २ रक्तं रागयुक्तं यथा ... नति तथा । ३ संस्थितः उत्थितः । ४ वृसीं ऋष्यासनम् । ५ रामः । ६ स्वञ्चितः सुतरां पूजितः आयतो दीर्घः निःस्वनः आलापो यस्मिन् । ७ श्रोत्रेन्द्रियसुखम् । ८ देशी मार्गश्चेति द्वौ गानप्रकारौ । तयोर्मध्ये मार्गनिर्वाहसामग्र्या अगायताम् । ९ श्रोत्रसुखानुभवेच्छया । १० मनुमारभ्य ।

तदिदं वर्तयिष्यामि सर्वं निखिलमादितः । धर्मकामार्थसहितं श्रोतव्यमनसूयया ॥ ४
कोसलो नाम मुदितः स्फीतो जनपदो महान् । निविष्टः सरयूतीरे प्रभूतधनधान्यवान् ॥ ५
अयोध्या नाम नगरी तत्रासील्लोकविश्रुता । मनुना मानवेन्द्रेण या पुरी निर्मिता स्वयम् ॥ ६
आयता दश च द्वे च योजनानि महापुरी । श्रीमती त्रीणि विस्तीर्णा सुविभक्तमहापथा ॥ ७
राजमार्गेण महता सुविभक्तेन शोभिता । मुक्तपुष्पावकीर्णेन जलसिक्तेन नित्यशः ॥ ८
तां तु राजा दशरथो महाराष्ट्रविवर्धनः । पुरीमावासयामास दिवं देवपतिर्यथा ॥ ९
कवाटतोरणवतीं सुविभक्तान्तरापणाम् । सर्वयन्त्रायुधवतीमुपेतां सर्वशिल्पिभिः ॥ १०
सूतमागधसंबाधां श्रीमतीमतुलप्रभाम् । उच्चाट्टालध्वजवतीं शतघ्नीशतसंकुलाम् ॥ ११
वधूनाटकसंघैश्च संयुक्तां सर्वतः पुरीम् । उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ १२
दुर्गगम्भीरपरिघां दुर्गामन्यैर्दुरासदाम् । वाजिवारणसंपूर्णां गोभिरुष्ट्रैः खरैस्तथा ॥ १३
सामन्तराजसङ्घैश्च बलिकर्मभिरावृताम् । नानादेशनिवासैश्च वणिग्भिरुपशोभिताम् ॥ १४
प्रासादै रत्नविकृतैः पर्वतैरुपशोभिताम् । कूटागारैश्च संपूर्णामिन्द्रस्येवामरावतीम् ॥ १५
चित्रामष्टापदाकारां वरनारीगणैर्युताम् । सर्वरत्नसमाकीर्णां विमानगृहशोभिताम् ॥ १६
गृहगाढामविच्छिद्रां समभूमौ निवेशिताम् । शालितण्डुलसंपूर्णामिक्षुकाण्डरसोदकाम् ॥ १७
दुन्दुभीभिर्मृदङ्गैश्च वीणाभिः पणवैस्तथा । नादितां भृशमत्यर्थं पृथिव्यां तामनुत्तमाम् ॥ १८
विमानमिव सिद्धानां तपसाधिगतं दिवि । सुनिवेशितवेश्मान्तां नरोत्तमसमावृताम् ॥ १९
ये च बाणैर्न विध्यन्ति विविक्तमपरापरम् । शब्दवेध्यं च विततं लघुहस्ता विशारदाः ॥ २०
सिंहव्याघ्रवराहाणां मत्तानां नदतां वने । हन्तारो निशितैः शस्त्रैर्बलाद्बाहुबलैरपि ॥ २१
तादृशानां सहस्रैस्तामभिपूर्णां महारथैः । पुरीमावासयामास राजा दशरथस्तदा ॥ २२

तामग्निमद्भिर्गुणवद्भिरावृतां द्विजोत्तमैर्वेदषडङ्गपारगैः ।
सहस्रदैः सत्यरतैर्महात्मभिर्महर्षिकल्पैरृषिभिश्च केवलैः ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये बालकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

## षष्ठः सर्गः ।

तस्यां पुर्यामयोध्यायां वेदवित्सर्वसंग्रहः । दीर्घदर्शी महातेजाः पौरजानपदप्रियः ॥ १
इक्ष्वाकूणामतिरथो यज्वा धर्मरतो वशी । महर्षिकल्पो राजर्षिस्त्रिषु लोकेषु विश्रुतः ॥ २
बलवान्निहतामित्रो मित्रवान्विजितेन्द्रियः । धनैश्च संग्रहैश्चान्यैः शक्रवैश्रवणोपमः ॥ ३
यथा मनुर्महातेजा लोकस्य परिरक्षिता । तथा दशरथो राजा वसञ्जगदपालयत् ॥ ४
तेन सत्याभिसन्धेन त्रिवर्गमनुतिष्ठता । पालिता सा पुरी श्रेष्ठा इन्द्रेणेवामरावती ॥ ५
तस्मिन्पुरवरे हृष्टा धर्मात्मानो बहुश्रुताः । नरास्तुष्टा धनैः स्वैः स्वैरलुब्धाः सत्यवादिनः ॥ ६
नाल्पसंनिचयः कश्चिदासीत्तस्मिन्पुरोत्तमे । कुटुम्बी यो ह्यसिद्धार्थोऽगवाश्वधनधान्यवान् ॥ ७
कामी वा न कदर्यो वा नृशंसः पुरुषः क्वचित् । द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः ॥ ८
सर्वे नराश्च नार्यश्च धर्मशीलाः सुसंयताः । उदिताः शीलवृत्ताभ्यां महर्षय इवामलाः ॥ ९

---

१ अनसूयया श्रद्धया । २ असूत्रग्रथितैः पुष्पैरवकीर्णेन । ३ मण्डपोपरि निर्मितगृह अट्टालः । ४ वधूनां ये नाटकाः नर्तयितारः तेषां सङ्घैः । ५ पर्वतैः क्रीडापर्वतैः । ६ अष्टापदं शारिफलमित्यमरः । ७ गृहैर्निबिडाम् । ८ विविक्तं असहायम् । ९ परे पित्रादयः अपरे पुत्रादयः तैर्हीनं वंशस्यैकतन्तुमितियावत् । १० प्रच्छन्नमिति तात्पर्यार्थः । ११ पलायितम् ।

